सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।

सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ।। 1 ।।

Contd…..

एकवंशभवा भूपाः कुलजा बहवोऽपि वा ।

शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ।। 2 ।।

**Contd…..**

अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः ।
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ।। 3 ।।

Contd…..

चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत् ।
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा ।। 4 ।।

Contd…..

क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनम् ।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ।। 5 ।।

Contd…..

नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।
नानावृत्तमयः कापि सर्गः कश्चन दृश्यते ।। 6 ।।

Contd.....

सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।
सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।। 7 ।।

Contd…..

प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ।। 8 ।।

Contd…..

रणप्रयाणोपयममन्त्रपुत्रोदयादयः ।।

वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ।। 9 ।।

Contd…..

कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।।

नामास्य सर्गोपादेयकथया सर्गनाम तु ।। 10 ।।

Contd…..

## प्रमुखानि महाकाव्यानि यथा-

| कृतिः | - | कविः |
| --- | --- | --- |
| रघुवंशम् | - | कालिदासः । |
| कुमारसम्भवम् | - | कालिदासः । |
| किरातार्जुनीयम् | - | भारविः । |
| शिशुपालवधम् | - | माघः । |
| नैषधीयचरितम् | - | श्रीहर्षः । |
| बुद्धचरितम् | - | अश्वघोषः । |

इत्यादीनि ।

## ध्यातव्याः अंशाः –

- रघुवंशं, कुमारसम्भवं, किरातार्जुनीयं, शिशुपालवधं, नैषधीयचरितं च एतानि संस्कृतवाङ्मये पञ्चमहाकाव्यानि इति प्रसिद्धानि ।
- कालिदासेतरकाव्यानि (किरातार्जुनीयं, शिशुपालवधं, नैषधीयचरितं च) बृहत्त्रयी इति कथ्यते ।
- सुप्रसिद्धव्याख्यानकर्तुः मल्लिनाथस्य व्याख्यानं पञ्चमहाकाव्येषु उपलभ्यते ।

